प्रविचिन्त्याप्यान्तरं किञ्चनानन्दममन्दप्रसरमनुभवामः। एतत्परिचर्य्यार्थमुपसम्भृतैरुपचारैर्भवतामपि कश्चित् सन्तोषः समापद्यते चेत्तदात्मानं कृतकृत्यं मत्वा भवद्भ्यो धन्यवादशतं वितरीतुमिच्छामः। परमतिमात्रं प्रयत्यापि प्रतिकूलांस्तांस्तान् विषयानवाप्य प्रारिप्सितमपि पत्रिकागतं मङ्गलं नैव निष्पादयितुमलमभवामेति क्लेशमनुभवामः।

अद्यत्वे पुनः परिजद्विद्यालयेऽध्यापनादिविविधावतिव्यापृतात्मनो न मे समयोऽपि पर्य्याप्तः पत्रिकामिमामुपचर्य्यया सम्भावयितुम्। अनुपचारसम्भाविता चेयं प्रतिपदं विषीदन्ती भवतोऽपि सुतरां दुःखाकरोतीति प्रेक्षावत्प्रवृत्तिश्चोपलभामहे। तदेवं पत्रिकागतं कल्याणविशेषं पाठकगोचरं सौमनस्यप्रकारमात्मीयञ्च समयाभावादिभिः परिचर्य्यासामर्थ्यमर्थतः समाकलय्यास्याः सम्पादनभारमात्मस्कन्धादवतारयामः।

अवतार्य्य च भारमिमं समर्थतरस्य तत्रभवतः क्षितीशचन्द्रचट्टोपाध्याय एम् ए, महोदयस्य स्कन्धे समारोप्य गुणवत्पात्रप्रतिपादितकन्यका इव स्वच्छान्तःकरणाः संवृत्ताः स्मः। नूतनवर्षप्रारम्भादेव तत्रभवन्तो भवतः पत्रिकाञ्च सममेव परिचर्य्यया परितोषयिष्यन्तीति दृढं विश्वसिमः। विश्वविद्यालयेऽध्यापयतामनवद्यविद्यागौरवसम्भृतानामेषां चट्टोपाध्यायमहाभागानां सममाङ्गलभाषया व्याकरणज्ञानप्रावीण्यं साहित्यसरोऽवगाहित्वम् अलङ्कारपरिशीलननिष्कलङ्कित्वमद्यत्वे नान्यत्रावलोक्यन्तेऽस्माभिः। काले व्यक्तीभविष्यतामेतेषां गुणसमवायानामस्मत्कृतोऽयमुपन्यासः सूचिरिव ग्रन्थस्य निमित्तमिव शुभाशुभस्य, करेखेव मानवभागधेयस्य ज्ञापकतामाधत्ते न पुनर्निष्पादकताम्।

चिराय परिपोषितामिमामन्यस्मै प्रतिपादयतां यत्किञ्चनामानस्यं मनस्युदभूत्, तत् पुनः पात्रविशेषलाभलोभाद् विद्युत्प्रकाशं

प्रनष्टमिति सहर्षमावेदयितुमग्रे सराम:। नवसम्पादकनिवेदनमभिनववर्षारम्भे वैशाखपत्रिकायामुपचिन्नमनन्नभवत: पाठकमहाभागानानन्दयिष्यतीति प्रतिपन्नभाराणामधिकारे नास्माभि: स्थूलहस्तावलेप: प्रस्तूयते। जानीमहे, यदियं क्रमेण परिपुष्टशरीरेव परिलोकयिष्यते परिषत्प्रशस्तिमभिवाञ्छद्भिर्भवद्भि:।

सम्पादनभारं परिहरतापि परिचर्य्याभारोऽस्या: समं भवद्भिर्मयाप्यङ्गीकृत एवास्ते। अवसरे पुनर्निबन्धदानादिद्वारा भवतामस्या: पत्रिकायाश्च परिचरणपरा वयं भवद्भिर्द्रष्टव्या एवेत्याशास्महे। तदेवमवसरग्रहणायापृच्छामत्रभवत: पाठकमहाभागान् पश्चिमान्यस्माभि: सम्पादकरूपेण वितीर्णानि प्रणामाश्च परिरम्भाशाभिवादनशतानि च यथायोग्यं यथाकालमुपचारैश्चिरवन्त इत्येतावतीयमस्माकं पश्चिम परिचर्य्या।



# संस्कृत-साहित्य-परिषद्ग्रन्थमाला

## मुद्रापित-ग्रन्थाः *

| | | मूल्यम् साधारणानाम् | | सदस्यानाम् | |
|---|---|---|---|---|---|
| २। | कालीतन्त्रम्—सटीकानुवादम् | * | ॥/०) | ,, | ॥०) |
| ३। | शङ्करीसङ्गीतम् | ,, | ।/०) | ,, | ।/) |
| ४। | मुक्तिवादः—गदाधर-भट्टाचार्य्यविरचितः, सटीकाद्वय-भाष्यानुवादसहितः | ,, | २) | ,, | १॥० |
| ५। | दुर्गापूजातत्त्वम्—रघुनन्दन-भट्टाचार्य्यकृतम्, शारदीयदुर्गोत्सवप्रमाणप्रयोगतत्त्वरूपम् | ,, | ३।० | ,, | ३) |
| ६। | पितृदयिता—अनिरुद्धभट्टकृता, सामवेदीय-सन्ध्या-श्राद्धादिपद्धतिरूपा | ,, | १।०) | ,, | १) |
| ७। | दुर्गोत्सवनिबन्धकदम्बम्—दुर्गोत्सवविवेकादि-ग्रन्थपञ्चकात्मकम् | ,, | ॥०) | ,, | ।/० |
| ८। | कारकोल्लासः—भरत-मल्लिककृतः, सोदाहरण-कारकनिर्णयरूपः | ,, | /०) | ,, | /०) |
| ९। | ऋग्वेदभाष्योपक्रमणिका—सायणकृता, आङ्गल-भाषाटिप्पणसमेता | ,, | ॥०) | ,, | ॥/०) |
| १०। | ग्रहयागतत्त्वम्—रघुनन्दन-भट्टाचार्य्यकृतम् | ,, | ।/० | ,, | ।/० |
| ११। | प्रभाकरविजयम्—नन्दीश्वरविरचित-प्रभाकर-सम्प्रदायानुसारि-मीमांसाग्रन्थः | ,, | १।०) | ,, | १) |
| १२। | तीर्थतत्त्वम्—रघुनन्दन-भट्टाचार्य्यकृतम् | ,, | ।/० | ,, | ।/० |
| १३। | पवनदूतम्—लक्ष्मण-सेन-सभाकवि-धोयीकविकृतम् | ,, | ॥०) | ,, | ॥/०) |
| १४। | नलदमयन्तीयम्—( सप्ताङ्कनाटकम् ) श्रीकालीपद-तर्काचार्य्यकृतम् | ,, | १।०) | ,, | |
| १५। | प्रशस्तपादभाष्यम्—जगदीश-सूक्तिसहितम्, नवीनया सूक्तिदीपिकया भाषाभाष्येण च समलङ्कृतम् | | २) | ,, | १॥) |
| १६। | यात्रातत्त्वम्—श्रीरघुनन्दनभट्टाचार्य्य-कृतम्, विष्णो रथयात्रादि द्वादशयात्रापद्धति-रूपम् | | ३) | ,, | ५० |
| १७। | ऋक्प्रातिशाख्यम्—उवट-भाष्यानुसारिण्या व्याख्यया समेतम् | | २।० | ,, | २) |
| १८। | प्रमेयरत्नावली—बलदेव-विद्याभूषणकृतो वैष्णवदर्शनग्रन्थः | | १।० | ,, | १) |

---

* देवनागराक्षर-मुद्रितनामानि पुस्तकानि देवनागराक्षरेण तथा वङ्गाक्षरमुद्रितनामानि वङ्गाक्षरेण मुद्रापितानीति बोद्धव्यम्।

## मुद्राप्यमाणा ग्रन्थाः

१। आनन्दलतिका ( चम्पूकाव्यम् )—दम्पतिभ्यां जयन्ती-कृष्णनाथाभ्यां विरचिता।

२। छन्दोगमन्त्रभाष्यम्—भट्ट-गुणविष्णुकृतम्। } (अचिरात् मुद्रापितं भविष्यति)

३। भाषारत्नम्—अभिनव-कणादकृतम्। }

४। फिट्सूत्रम्

## मुद्रापणार्थं गृहीता ग्रन्थाः

१। समञ्जसा—अनूप-नारायणकृता ब्रह्मसूत्रवृत्तिः।

२। रामायणम्—वाल्मीकि-विरचितम्।

---

Printed and Published by
Durgamohan Kavya-Sankhya-Puranatirtha, M. A.
*Sanskrit Sahitya Parishat, Shyambazar, Calcutta*

Printed at
Siddheswar Press,
*39/2, Shibnarayan Das's Lane, Calcutta.*

